नन्वयं महाननर्थः कथं लयमेष्यतीत्याशंक्य रविप्रभां वीक्ष्य तम इव महावाक्यसविधां त्वां दृष्ट्वैव जगल्लीनं भविष्यतीत्याह। उद्दीपितामिति। महावाक्यैरुद्दीपितां तज्जन्यां ब्रह्मात्मैक्यगोचरामखंडाकारां निर्विकल्पां त्वां वीक्ष्यैव प्राप्यैव। अहिराट् सर्पराजः रज्जुबुद्धिं वीक्ष्यैव जगन्नंक्ष्यति मृतकरी यथा नभो नीलिमवत् दृश्यते मानमेव गमिष्यति॥ ६३॥

**तदा निवृत्तानर्थाः स्युः प्राप्तानंदाश्च भिक्षवः॥**
**भद्रे तव प्रसादेन माविलंबं विधेहि तत्॥ ६४॥**

ततोऽपि किं भविष्यतीत्यत आह। तदेति। भिक्षवः कर्मंदिनः निवृत्तानर्थाः निवृत्तोऽनर्थो अविवेको येषां ते तथा। नन्वेवं तार्किकाभिमतमोक्षेऽतिप्रसंगोऽत आह। प्राप्तानंदाश्च प्राप्तः परिपूर्णो निरतिशय आनंदो यैः ते तथा। हे भद्रे तव प्रसादेन भविष्यंति तत्तस्मात्त्वदधीनत्वात् मा विलंबं विधेहि चिरं मा कुरु॥ ६४॥

**बहूनामुपकाराय स्वनाशोऽप्युचितः सताम्॥**
**स्वयं मृत्वा रसेंद्रो हि संजीवयति देहिनम्॥ ६५॥**

ननु विषयत्यागे मृतिर्मे ऽवश्यं भविष्यतीत्यत आह। बहूनामिति। सता परोपकृतिधृतदेहानां स्वनाशोऽप्युचितः। कस्मै प्रयोजनाय। बहूनामुपकाराय। अत्र दृष्टांतमाह। स्वयं मृत्वा रसेंद्रो हि रसेंद्रः पारदः 'रसो रसेंद्रः सूतश्च पारदो मिश्रकस्तथा॥ इति पंचविधो जातः क्षेत्रभेदेन शंभुजः' इत्युक्ते रसेंद्रो यथा स्वनाशं प्राप्य देहिनः प्राणिनो जीवयति। हि शब्दो वैद्यकप्रसिद्धिद्योतनार्थः। परोपकाराय दधीचिना देवेभ्यो ऽस्थीनि दत्तानि, शरणागताय व्याधाय पक्षिणा स्वशरीरं दत्तम्, शिबिना कपोतोपकाराय स्वमांसखंडं कृत्वा श्येनायार्पितम्, अतीष्टापि काशी अगस्त्येन देवोपकृतये त्यक्ता। अतएवोक्तं स्कांदे 'परोपकरणं येषां जागर्ति हृदये सताम्॥ विपदस्तेन नश्यंति संपदः स्युः पदे पदे' इति। तस्मात्परोपकरणार्थं स्वनाशोऽप्युचितः सतामिति। त्वयाऽपि भिक्षूपकाराय स्वदेहस्त्यक्तव्य इति भावः॥ ६५॥

जीवितं मरणं तन्वि परोपकृतिवर्जितम् ॥
मरणं जीवितं मन्ये यत्परोपकृतिक्षमम् ॥ ६६ ॥

परोपकारं विना जीवितं न शोभते इत्याह । जीवितमिति । हे तन्वि परोपकृतिवर्जितं जीवितं मरणं यत्परोपकृतिक्षमं परोपकारे समर्थं मरणं जीवितं मन्ये ॥ ६६ ॥

इति प्रबोधिता चित्तवृत्तिस्तेनात्र योगिना ॥
विरक्ता विषयेभ्यः सा ब्रह्मात्मैक्यमुपाददे ॥ ६७ ॥

एवमुपदिष्टा चित्तवृत्तिः किमकरोदित्याशंक्य न किमप्यकरोत्कर्तृत्वनिदानाज्ञाननिवर्तकब्रह्मात्मभावमेव प्राप इत्याह । इतीति । तेन योगिना परिव्राजा ऽत्र व्यवहारदशायामिति पूर्वोक्तप्रकारेण विषयेभ्यो विरक्ता ऐहिकामुष्मिकभोगान् ध्वांत इव त्यक्त्वा प्रबोधिता उपदिष्टा सती ब्रह्मात्मैक्यं ब्रह्मसाक्षात्कारमुपाददे प्राप इति ॥ ६७ ॥

प्राप्तस्यैवानंदवार्धेस्तदाप्ति-
स्त्यक्तस्यैव क्लेशवार्धेस्तदा ऽभूत् ॥
त्यागो यस्मिंस्तत्त्वमस्यादिवाक्यै-
र्जाता काले तादृशी चित्तवृत्तिः ॥ ६८ ॥

ननु पूर्णानंदस्यैक्यज्ञानात्पूर्वमपि मत्स्वरूपेण प्राप्तत्वात्तदुद्देशेन तदुपाये प्रवृत्तिर्व्यर्थी इत्याशंक्य विस्मृतचामीकरवत् प्राप्तस्यैवोपचारिकी प्राप्तिर्ज्ञानकाले निवृत्तिरित्याशयेनाह । प्राप्तस्यैवेति । यस्मिन्काले तत्त्वमस्यादिवाक्यैस्तादृशी चित्तवृत्तिरखंडाकारा निर्विकल्पका जाता तदा तस्मिन्काले प्राप्तस्यैवानंदवार्धेर्निरतिशयपरिपूर्णानंदसमुद्रस्य प्राप्तिः । त्यक्तस्यैव क्लेशवार्धेः क्लेशानामविद्यास्मितारागद्वेषाभिनिवेशानां वार्धिः समुद्रस्तस्य त्यागो निवृत्तिः, आगिस्त्वयत्त्वात् यदविषयत्वं यद्वासते तद्विषया तन्निवृत्तिरिति न्यायेन रज्जुसर्पादौ दृष्टत्वात् । नन्वेवमपि तदापेक्षानसाध्यत्वं प्रधर्षितिं चेदत्राहुः । यस्मिन्सत्युत्तरक्षणे संबंधो यस्य तत्तत्साध्यमिति न्यायानुरोधेन ज्ञाने सत्युत्तरक्षणे निरतिशयानंदत्वं ज्ञानाधारे निर-

तिशयानंदाभावसत्वमिति साध्यलक्षणसत्वान्निरतिशयानंदस्य प्राप्तस्यापि योगक्षेमसाधारण्यात् प्राप्तेः सत्वात्साध्यत्वोपपत्तेरिति । नन्वेवमप्यविद्यानिवृत्तेः क्षणिकत्वे मोक्षः स्थिरपुरुषार्थो न स्यादिति चेन्न । अविद्यानिवृत्तेः स्वतः पुरुषार्थत्वाभावेन तन्निवृत्त्याविर्भूताखंडानंदस्य सर्वदुःखोच्छेदस्य च पुरुषार्थत्वेन साध्यत्वादात्मरूपत्वेन स्थिरत्वादिति भावः ॥ ६८ ॥

स हरिहरसरस्वतीयतींद्र-
द्युमणिकराभिहताज्ञतांधकारः ॥
जयति परमहंसयोगिवर्यो-
नरहरिसंज्ञचिदात्मसक्तचित्तः ॥ ६९ ॥
जिताहारो जितक्रोधो जगन्नाथसरस्वती ॥
येनाहं रचितो ग्रंथः अद्वैतामृतसंज्ञकः ॥ १७० ॥

मगलादीनि मंगलमध्यानि मंगलांतानि शास्त्राणि प्रथंत इति महाभाष्योक्तेः ग्रंथांते 'यस्य देवे पराभक्तिर्यथा देवे तथा गुरौ॥ तस्यैते कथिता ह्यर्थाः प्रकाशंते महात्मनः' इतिश्रुतेर्गुरूपकारं कथयन् स्वाचिंतनरूपं स्वोपास्यचिंतनरूपं मंगलं सूचयंश्च यथार्थनामको ग्रंथो ऽद्वैतामृतसंज्ञको मया समापित इत्याह । स हरिहरेति द्वाभ्याम् । येनायमद्वैतामृतसंज्ञको ग्रंथो रचितः स जगन्नाथसरस्वती जयतीति संबंधः। कथंभूतः जगन्नाथसरस्वती। हरिहरसरस्वतीयतींद्रद्युमणिकराभिहतांधकारः हरिहरसरस्वतीयतींद्रो द्युमणिः सूर्य इव तस्य कराः किरणाः वाक्यं तेनाभिहतो नष्टो ऽज्ञता एवांधकारो यस्य सः । पुनः परमहंसयोगिषु वर्यः श्रेष्ठः । नरहरिसंज्ञचिदात्मसक्तचित्तः नृसिंहपदमसिद्धा चित् ईश्वरः तत्पदार्थः स एवात्मा त्वंपदलक्ष्यस्तत्र सक्तं चित्तं यस्य सः। एतेनोपमहावेयमेयो दर्शितः। जिताहारः वशीकृतसर्वेद्रियः। जितक्रोधः कामाभावात्क्रोधाभाव ॥ ६९ ॥ ७० ॥

एतस्य कवलान्यं चास्वाद्य सादरतां गताः ॥
अमृतत्वं प्रयांत्वाशु विबुधा यतिसत्तमाः ॥१७१॥

एतद्ग्रंथविचारफलनिर्देशपूर्वकं मंगलांतानि शास्त्राणि प्रथंते इतिवचनादंते आशीर्वादात्मकं मंगलमाचरति । एतस्येति । एतस्याद्वैतामृतसंज्ञस्य पंचकवलानास्वाद्य पंचकवलप्रतिपाद्याद्वैतानंदमनुभूय । अथवा । पंचभूतग्रासान् आस्वाद्य प्रत्यगात्मनि अंतर्भाव्य यथाभुक्तमन्नं स्वातिरिक्तं न मन्यते तथेदमपि स्वातिरिक्तं नेति निश्चित्य सादरतां गताः जगद्विस्मरणपूर्वकाद्वैतानंदप्रीतिनिर्भरनिमग्नाः आशु शीघ्रं वृत्त्युदयकालमेवामृतत्वं मोक्षं प्रयांतु । विबुधाः विवेकिनः । यतिसत्तमाः परमहंसपरिव्राजका इति ॥ १७१ ॥ ॥ श्रुत्यंतार्थप्रधाने हि कवले पंचमे शुभा ॥ व्याख्यातया प्रसन्नोऽस्तु कवलः प्रतिपादितः ॥ १ ॥ श्रीशिवसहायसद्गुरुचरणाब्ज आलंबनेन निर्मायि ॥ टीकाऽल्पमतिहिताद्वैतामृततरंगिणीनाम ॥ २ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यहरिहरसरस्वतीप्रियाशिष्यपरमहंसजगन्नाथसरस्वतीविरचिते ऽद्वैतामृते पंचमः कवलः संपूर्णः ॥ ५ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यजगन्नाथसरस्वतीविरचिते ऽद्वैतामृते ऽमृततरंगिणीटीकायां पंचमः कवलः संपूर्णः ॥ ५ ॥ शुभं भवतु ॥ ॥

